इति । तथा

'स्वस्थचेष्टाश्च ये मर्त्याः स्मरन्ति मम नारद ।
काष्ठपाषाणतुल्यांस्तानन्तकाले स्मराम्यहम् ॥'

इत्युक्तं । न च संस्थितस्य उत्तमतया अधिकारिणो लोकयात्राप्रसिद्धास्रुविमोचनादिपरिदेवितं कार्यम्, यथोक्तं श्रीपूर्वशासने

'निषिद्धं सर्वशास्त्राणां रोदनं कायशासनम् ।
विशेषाद्भैरवे तन्त्रे शम्बरं पशुकल्पितम् ॥
अयुक्तमिममाचारं त्यजेद्वै नौर्ध्वदैहिकम् ।'

इति । श्रीमतरहस्यतिलकेऽपि उत्तमनयाधिकारिणां संवृतनिजसदाचाराणां लोकप्रसिद्धिरक्षायै तदाचारापरित्यागोऽपि आम्नातः, तथाहि

'लोकाचारस्य विच्छेदो न कर्तव्यः कदाचन ।
गुह्यं गुह्यतरं कार्यं बाह्यं बाह्यान्तरं तथा ॥'

इति । अनयोश्च पक्षयोरेकतरपक्षावलम्बने प्रवरगुरव एव प्रमाणम् । पित्रुद्देशेन च यागजपहोमोपवासादि गुरुमाराध्य अवश्यं विधातव्यम् इत्युक्तम् श्रीमहाकुले

'आसूत्रिते भागलुप्ते यथेष्टरजसान्विते ।
अपि मन्त्रमनाहूय मण्डले विधिचोदिते ॥
संनिधानं प्रकुर्वन्ति मन्त्राणां सप्तकोटयः ।
किं पुनः कौलिकाम्नायस्तत्राहूय प्रपूजितः ॥
समुद्दिश्य पितॄन्भद्रे तदानन्त्याय कल्पते ॥'

इति । श्रीप्रचण्डभैरवेऽपि उक्तम्

'तनुवित्ताश्च ये मर्त्या गुरुमन्त्रपरायणाः ।
विशेषेण महायागपूजनं प्रति न क्षमाः ॥
सिद्धलिङ्गं तदा तेषां पित्रर्थं पूजयेद्बुधः ।
उचितं पूजनं तत्र देवानामपि दुर्लभम् ॥
कुलान्युद्धरते तत्र दश पूर्वापराण्यपि ।'

इति । श्रीभागेशमतेऽपि

'विषसर्पाग्न्यपस्मारक्षुधात्यशनबन्धनैः ।
चण्डालोदकनिर्घातराजशासनतस्करैः ॥
निदाघशीतशकटलूतोषितमहाव्रजैः ।
ब्राह्मणम्लेच्छपाषण्डनिर्मूलोड्डामरक्रमैः ॥
ये हताः पापकर्माणो मित्रद्रोहरताश्च ये ।
स्वामिद्रोहकृताश्चान्ये ये तथात्मोपघातकाः ॥
गुर्विण्यो दुश्चरित्राश्च प्रसवेन हताश्च याः ।
तेषामुद्धरणोपायो नान्योऽस्ति वरवर्णिनि ॥
विना यागं विना होमं विना मूर्तिपरिग्रहम् ।
विना महाजालविधिप्रयोगाहृतपुद्गलम् ॥
मृतोद्धरणसंज्ञां च दीक्षां सर्वाध्ववर्तिनीम् ।'

इति । तदयं तावत् ऊर्ध्वशासनवर्तिनां क्रमः । इतरेषां तु स्वशास्त्रसमयोपन्यस्तानुष्ठानमेव श्रेयः, तदलमनेन । एवं समनन्तरोदीरितया नीत्या जन्ममरणप्रबन्धसंबन्धम् अवधार्य, अकृत्रिमस्वरूपपरामर्शनेन जीवन्मुक्तिमासाद्य कृतकृत्यतामालम्बन्ते सन्तः । यथोक्तम्

'विदितमतिसतत्त्वाः संविदम्भोनिधाना-
दचलहृदयवीर्याकर्षनिष्पीडनोत्थम् ।
अमृतमिति निगीर्णे कालकूटेऽपि देवा
यदि पिबत तदानीं निश्चितं वः शिवत्वम् ॥'

इति ।

श्रीमद्योगेश्वराचार्यप्रसादासादितस्थितिः ।
वामदेवश्चकारेदं जन्ममृत्युविचारणम् ॥

अभिनवमदमन्थरा पुरन्ध्री
मधुसमये मधुराश्च गीतिबन्धाः ।
बत बत हृदयं हरन्ति वाचो
ललितपदाश्च रहस्यवस्तुगर्भाः ॥

समासोऽयं जन्ममरणविचाराख्यो ग्रन्थः ॥

---

कृतिस्तत्रभवन्महामाहेश्वराचार्यवर्यश्रीमद्भट्टवामदेवस्य ॥

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥
श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥
तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्-
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

तिलकम् ॥

श्रीस्वात्मचिदमृतवपुःशंकरार्पणं भूयात् ॥

Kashmir Series of Texts and Studies.
No. XX.

# THE AMARAUGHA SHĀSAN

OF

## GŌRAKSHA-NĀTHA.

Edited with notes by
MAHĀMAHOPĀDHYĀYA
PAṆḌIT MUKUND RĀM SHĀSTRĪ,
Officer-in-Charge Research Department,
JAMMU AND KASHMIR STATE
SRINAGAR.

Published under the Authority of the Government of
His Highness Lieut.-General Mahārāja
Sir PRATĀP SINGH SĀHIB BAHĀDUR,
G. C. S. I., G. C. I. E., K. G. C. B. E., LL. D.,
MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE 'NIRNAYA-SAGAR' PRESS.
1918.



काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २०

# अमरौघशासनम् ।

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीसिद्धगोरक्षनाथविरचितम् ।

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-श्रीप्रतापसिंहवरप्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च)कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

मुम्बय्यां
निर्णयसागराख्यमुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः ।




संवत् १९७५ खैस्ताब्दः १९१८

काश्मीर-श्रीनगर ।

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्-
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम्॥१॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

अस्ति चानेनैव ग्रन्थेन सहकृत्य संबद्धं

# अमरौघशासनम्

( ग्रन्थाङ्कः २० )

इत्यभिख्यो द्वितीयोऽपि ग्रन्थः 'श्रीमद्गोरक्षनाथसिद्धविरचितः' संबद्धः ।

अस्य ग्रन्थस्य च विरचनकालः ग्रन्थकर्तुः 'अयं लोकप्रसिद्धो गोरक्षनाथः तदन्यो वा' इति प्रादुर्भावकाल-वसतिस्थानादिविषयकमितिवृत्तं निर्णेतुं न शक्यते ।

इदं पुस्तकमपि मूलादर्शमात्रमेकमेव कुत्राप्यसंलक्ष्यमाणद्वितीयादर्शकं पूर्ववर्णितवृत्तान्तस्य आगराप्रदेशात्समधिगतप्राचीनशारदाक्षराङ्कितकाश्मीरिकपुस्तकसमुदायस्य मध्यवर्ति एकबन्धनबद्धान्यग्रन्थसहवर्त्युपर्यभिहितपुस्तकसहसंबद्धं सप्तचत्वारिंशशत्यारम्भिक—( ४६०३ समीपवर्ति ) लौकिकसंवत्सरानेहसि ( यः खैष्टः संवत्सरकालः १५२५ शात् उत्तरवर्ती षोडशशत्यपूर्वभागः समायाति ) लिखितं समस्ति ।

अस्ति चात्र विषयः – श्रीस्वच्छन्दतन्त्रादिमुख्यशैवागमेषु यथोपयोगं स्थाने स्थाने वितत्यानुशिष्टयोगपद्धत्यनुसृत्या सर्वासां नाडीनां मुख्यभूतस्य शारीर-वामदक्षिणाङ्गमध्यव्यापिनः सोमसूर्याग्निसमाश्रयभूतेडापिङ्गलासुषुम्नाख्यनाडीत्रयस्य मार्गे, शनैः शनैः प्राणवायोः संचारणाभ्यासात्, मूलाधारादुत्थाप्य नाभिहृत्कण्ठतालुब्रह्मरन्ध्रान्तस्थानेषु क्रमेण ऊर्ध्वोर्ध्वयोजनया स्थित्यभ्यासबलात् वासनाश्रयमनोजयमनु परमोपादेयब्रह्मरन्ध्रद्वादशान्तवार्तिसो-

मामृतरसास्वादनेन सांसारिकनिःशेषक्लेशहानि-समस्तसिद्ध्यधिगमात्मभोगावाप्ति-परसौख्यमोक्षाप्तिफलानां, सारणा-परासारणा-प्रतिसारणा–शङ्खसारणा–महासारणादिपर्यायाणां नानाविधमुद्राणां सुगमपद्धत्यनुशासनम् । तदनु च शरीरोपादानपञ्चभूतानां, तन्मात्राणां, तद्गुणानां, तथा प्राणदशकस्य, इडादिनाडीसमुदायस्य, तद्दैवतसोमादीनां, त्वगादिदशधातूनां, तत्स्थितिपरिणामस्वरूपपरिमाणादीनां, मूलाधारादिस्थानानां, तद्वर्तिपद्मादीनां च संज्ञास्वरूपस्थितिगुणप्रभृतिसमनुबन्धिसमस्तज्ञेयज्ञानप्रक्रिया संक्षिप्य निर्णीतास्ति ।

तदेतद्ग्रन्थस्यापि समाधानेन मनननिदिध्यासनपद्धत्यवलम्बनेन दुःखहानि-नित्यसुखात्मभोगमोक्षफलरसास्वादनोत्तरं सुफलयन्तु मामकीनं प्रकाशनान्तपरिश्रमं सज्जनवरसद्विद्वांसः ।

इत्याशासेऽहं प्रकाशकः

**म० म० पं० मुकुन्दराम-शास्त्री**

ॐश्रीमदमृतमूर्तये शंकराय नमः

अथ

# अमरौघशासनम् ।

श्रीगोरक्षनाथसिद्धविरचितम् ।

ऊर्ध्वशक्तिनिपाताच्च तथाधःशक्तिकुञ्चनात् ।
मध्यशक्तिप्रबोधेन जायते परमं सुखम् ॥

## ऊर्ध्वशक्तिनिपातः कन्दचतुष्टयेन ज्ञायते ।

यच्चन्द्रप्रभवं वराम्बरगतं यल्लिङ्गसंज्ञं जलं
स प्राणस्तदधः स्थिरं च कमलं धत्ते मुखोर्ध्वं हृदि ।
बद्ध्वा कुम्भकमात्मगाढरचितं तद्ब्रह्मनाडीगतं
ह्यानेतुं वदने षडध्वगकला सैवंविधा सारणा ॥

## षडध्वगा कथ्यते

घण्टाकोटिकपोलकोटरकुटीजिह्वाग्रमध्याश्रया-
च्छङ्खिन्यागतराजदन्तविवरं प्रान्तोर्ध्ववक्रेण यत् ।
संप्राप्तं हनुरन्ध्रमूलविधिना यच्चन्द्रतोयं मुखे
तत्सर्वं रविकालरूपसदने रक्षेत्परा सारणा ॥

## कर्मान्तरेण परा सारणा कथ्यते

नृत्यन्नित्योर्ध्वजिह्वो यदि पिबति पुमान्वक्रधारामृतौघं
सुस्वादं शीतलाङ्गं दुरितभयहरं क्षुत्पिपासाविनाशि ।
पिण्डस्थैर्यं यदस्माद्भवति बत महामृत्युरोगा द्रवन्ते
दौर्भाग्यं याति नाशं हरति विषजरां याति काले भ्रमित्वा॥

## सारणानन्तरं सारणा कथ्यते

जिह्वाग्रं त्वथ राजदन्तविवरं नीत्वा ततो घण्टिकां
संस्थाप्य प्रतिजिह्वपर्व शशिनो मार्गे कलां च क्षिपेत् ।
एवंसारणिके पतन्ति च सुधाधाराः पुनः षण्मुख-
गान्धाराप्यथ तत्कलापमथनं नाडीमुखोज्जृम्भणम् ॥

## सारणानन्तरं प्रतिसारणा कथ्यते

प्राणवातेन नीत्वोर्ध्वं कोटरे चन्द्रजां कलाम् ।
मन्थितां दिव्यजातां च तेन गान्धारकर्मणा ॥

## गान्धारानन्तरं प्रतिसारणा कथ्यते

नासापश्चिममार्गवाहपवनात्प्राणेऽतिदीर्घीकृते
चन्द्राम्बु प्रतिसारणां सुकृतिनः प्राग्घण्टिकायाः पथः ।
सिञ्चन्कालविशालवह्निवशगं भूत्वा स नाडीशतं
तत्कार्यं कुरुते पुनर्नवतनुं जीर्णद्रुमस्कन्धवत् ॥

## प्रतिसारणानन्तरं शङ्खसारणा कथ्यते

प्रोत्क्षिप्तं वृषणस्य गोलकयुगं मध्ये ध्वजं प्रोद्धृजं
नित्योर्ध्वे बत शङ्खसारणविधौ वक्रं विधेयं निजम् ।

सर्वस्थानशरीरबन्धनवशात्स्कन्धोद्धृतानां यथा
नाडीनां मुखतः सुधानिधिजलं सिञ्चन्नधो गच्छति ॥

## कर्मान्तरेण शङ्खसारणा कथ्यते

वृषणाकर्षणं कार्यमथवा शङ्खसारणा ।
बोधनं चैव कुण्डल्यास्तिष्ठेच्चैवोत्कटासनम् ॥

## शङ्खसारणानन्तरं महासारणा कथ्यते

पश्चादासनशुद्धवातनिकरानादाय कण्ठव्रणात्
संस्थाप्या रविमण्डले तु भुजगी संभूतनाडीत्रयात् ।
देवी मध्यपथोदिता प्रकुरुते कम्पं ततो मूर्च्छनां
दूराकर्षणदर्शनं श्रुतिगणांश्चान्या महासारणा ॥

## कर्मान्तरेण महासारणा कथ्यते

आधाराम्बुजकोशकन्दभुजगी संभूय नाडीत्रयात्
चन्द्रार्कोद्भवनाडिकोर्ध्वयुगलं चाद्वैतपथ्यागतम् ।
तत्रैवाङ्गुलिभिर्निपीड्य क्रमशः शान्ति मनो मारुतं
चन्द्रो याति रविं ततश्च भुवने तुल्या महासारणा ॥
सूर्यान्तः शशिवीचिदन्तवदन[ने]प्रान्तप्लवौघोरगी
संप्राप्ते पवनातिसङ्गहरणे क्षिप्रं ततो धाविता ।
श्रीमन्मध्यपथान्ततो विदधती कम्पादि कोपान्विता
तस्यैवाश्रययायिनोऽपि शशिनो दत्ता सुधा संमता ॥
आदौ शोषणिकोऽत्र सारणमतः कार्यं महासारणं
कर्तव्यं प्रतिसारणं च गुरुणा निर्दिष्टमार्गे क्रमात् ।
पश्चादेव च शङ्खसारणविधौ कार्यं महासारणं
संमूर्च्छा वितताकृतिः प्रतिदिनं वेलात्रयं दीयताम् ॥

आकुञ्चयागजकामरूपमचलं बन्धत्वजातं तनौ
नात्यूर्ध्वे चतुरङ्गुलाग्रविदिते स्थाने हृदा प्राणिते ।
दन्तैर्बन्धुरिते च वातयुगले प्रश्लेषणाश्लेषणात्
नाभिग्रन्थिविमोक्षपातसहजे मार्गे मनःसिद्धयः ॥

दूराकारविसर्पिते च पवने नाभेश्च मार्गस्थिते
बन्धेषु त्रिषु सत्सु सोऽपि शिथिले मध्यप्रबोधे सति ।
क्षिप्रं च ध्रियते द्विपीठमरुतोऽप्यूर्ध्वक्रमाकर्षणे
संयुक्तो गतिचित्तशोषणमतः प्राप्येऽनिले तिष्ठति ॥

मूले मूलोर्ध्वचक्रे वृषणकुलतले वह्निमातङ्गकूले
कम्पक्षोभभ्रमाढ्ये ध्वनितपरिचयं घर्मपातोर्ध्वरोम ।
भूमित्यागं कवित्वं परपुरविशनं वश्यमाकर्षणं च
ह्येवं वा चेतनाप्ता प्रभवति निखिला खेचरत्वप्रतिष्ठा ॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत् ।
हृदये परमे धाम्नि मध्ये तु रविचन्द्रमाः ॥

नादं तु तं गृहीत्वा च चैतन्यं तत्र योजयेत् ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत् ॥

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
अन्यत्सर्वं परित्यज्य शब्दब्रह्म सदाभ्यसेत् ॥

स्वसंवेद्यमसंवेद्यं शब्दब्रह्म द्विधा स्थितम् ।
चिनोति प्रथमः शब्दश्चिञ्चिनोति द्वितीयकः ॥

विवरश्च तृतीयः स्याच्छङ्खशब्दश्चतुर्थकः ।
पञ्चमो मेघनिर्घोषः षष्ठमेतदुदीरणम् ॥

सप्तमं कांस्यतालाख्यं मेघशब्दस्तथाष्टमम् ।
नवमोऽप्यग्निदाहश्च दशमो दुन्दुभिस्वनः ॥
अनाहतनिनादोऽयं पवनान्तविनिर्गतः ।
ध्वनितेन विना यस्तु नादश्चैवमपण्डितः ॥
चिनोति रसमुद्धृत्य चिञ्चिनोति भगाश्रितम् ।
विरसांशेन संप्राप्तं मेघशब्देन चाविशेत् ॥
मज्जां पतति निर्घोषः संस्थितोदधिभीषणः ।
कांस्यताले नभःशब्दः प्राणमेघध्वनिः क्रमात् ॥
जीवश्चैवाग्निदाहः स्यान्मोक्षः समरसो भवेत् ।
विशुद्धमित्थमात्मानं पश्येत चात्मनात्मनि ॥
प्रथमे जनवात्सल्यं द्वितीये रोगनाशनम् ।
तृतीयेन कवित्वं च दूराकर्षं चतुर्थके ॥
पञ्चमे वाचि कामित्वं षष्ठे भूमिं परित्यजेत् ।
सप्तमे दूरमालोक्य चाष्टमे वज्रवद्भवेत् ॥
नवमे स्फुरते कायो दशमे सामरस्यकम् ।
पृथ्वीमध्ये भवेत्पृथ्वी चापामापस्तथैव च ॥
तेजोमध्ये भवेत्तेजो वायुर्वायौ प्रलीयते ।
आकाशे लीयते सर्वः सतत्त्वः पिण्डसंग्रहः ॥
अनाहतो दिवारात्रौ ध्वनते तु धनञ्जयः ।
तत्रारूढो यदा योगी प्राप्नुयात्परमं पदम् ॥

---

अयं प्रकृतिभेदः, पृथ्वी आपः तेजः वायुः आकाशश्च – इति शरीरे पञ्च गुणाः महाभूतानि

भवन्ति, तत्रैव तानि पञ्चविधानि भवन्ति। अस्थि मांसं त्वक् नाडी रोमाणि इति पञ्चगुणा पृथिवी। लालामूत्रास्रुनिःस्वेदप्रस्वेदाः—इति पञ्चगुणा आपः। क्षुधा तृष्णा निद्रा आलस्यं कान्तिश्च—इति पञ्चगुणं तेजः। धावनं वल्गनम् आकुञ्चनं प्रसारणं निरोधश्च—इति पञ्चगुणो वायुः। रागो द्वेषो लज्जा भयं मोहश्च—इति पञ्चगुण आकाशः—इति पञ्चगुणालङ्कृतानि पञ्चतत्त्वानि। शब्दः स्पर्शः रसः रूपं गन्धश्च—इति पञ्च भूतगुणाः। शृङ्गारादिनवनाट्यरसाः इति हास्यादिभावाः शृङ्गारादीनाम्। कटुक-तिक्त-कषायाम्लमधुर-लवणाश्च—इति षट् आस्वादाः। शुभमशुभं च—इति कर्मद्वयम्। प्राणापान-समानोदान-व्याना, नाग-कूर्म-कृकर-देवदत्त-धनञ्जयाश्च—इति दश वाताः। इडा-पिङ्गला-सुषुम्ना-गान्धारी-हस्तिजिह्वा-यशस्विनी-पूषालम्बुसा-कुहू-शङ्खिनीप्रभृतयः द्वासप्ततिर्नाडीसहस्राणि। उत्पत्ति-स्थिति-प्रलयाश्च—इति मार्गत्रयम्। अ-

स्थिसंचयं षष्ठ्यधिकं शतत्रयम् अस्त्यस्य प्राणेन संबन्धः। काम-क्रोध-लोभ-मोह-मद-मानाहङ्काराश्च—इति सप्त बन्धनानि। विवेक-बोधसन्तोष-हर्ष-पुलक-क्षमोपशम-ध्यान-ज्ञानोत्सव-राग-वैराग्यानन्द-कम्प-मूर्च्छा-विकार-मनोवासनादीनि प्रकृतिस्वरूपाणि। रोम्णां कोटित्रयं सार्धं। वात-पित्त-श्लेष्माण—इति प्रकृतित्रयम्। वातः प्राणप्रकृतिः, पित्तं हुताशनोद्भूतं, श्लेष्मा निरोधात् भवति। त्वक् अस्रक् मांसं मेदः अस्थि मज्जा शुक्रं प्राणो जीवः शक्तिः—इति दश धातवः। घ्राणरन्ध्रद्वयं लोचनरन्ध्रद्वयं कर्णरन्ध्रद्वयं मुखरन्ध्रद्वयम् उत्सर्गरन्ध्रद्वयम्—इति दश द्वाराणि। अथ दशमद्वारं द्विविधं शुक्रमार्गममृतं, कालमार्गश्च—इति ब्रह्मदण्डमूले रविशशिमध्ये भगाकारमस्ति, तस्मादागतब्रह्मदण्डाश्रितं पश्चिमलिङ्गमस्ति, पश्चिमशब्देन स्थानमस्ति, तस्य मध्ये लिङ्गाकारमस्ति। अत्र पुरुषाणां रेतोमार्गः स्त्रीणां रजोमार्गः, सहैव तेन ब्रह्मदण्डरेखाश्रितपुष्पसमये सर्व-

व्यापकनाडीसमूहागतं कामिनीरजः स्रवति । तत्रैव कामविषहरनिरञ्जनानां संयोगं बीजपातात् आनन्दागमः प्रलयकाल-विषकालयोः कर्ता निरञ्जनश्च इति ।

शक्तित्रयविनिर्भिन्ने चित्ते बीजनिरञ्जनात् ।
वज्रपूजापदानन्दं यः करोति स मन्मथः ॥
चित्ते तृप्ते मनोमुक्तिरूर्ध्वमार्गाश्रितेऽनले ।
उदानचलितं रेतो मृत्युरेखाविषं विदुः ॥

चित्तमध्ये भवेद्यस्तु बालाग्रशतधाश्रये ।
नानाभावविनिर्मुक्तः स च प्रोक्तो निरञ्जनः ॥

निरञ्जनाश्रिता शक्तिः सूक्ष्मशक्त्या तयाश्रितम् ।
मनस्याश्रयतामेति ज्ञेयं शक्तित्रयं तु तत् ॥
शक्तित्रयोद्भवं बीजं बीजात्कामो विषं ततः ।
कामः सृष्टितया प्रोक्तो विषं मृत्युपदं भवेत् ॥

किं बहुना, काम-विषहर-निरञ्जनानां ब्रह्मदण्डमूलाङ्कुरे निवासः एभिर्यदसुखो [एभिर्यदा मुक्तिः स] मोक्षः भस्मीभूतस्य देहस्य पुनरागमनकार्यं नास्ति । अहो मूर्खता लोकस्य, केचिद्वदन्ति – शुभाशुभकर्मविच्छेदनं मोक्षः । केचिद्वदन्ति – वेदपाठाश्रितो मोक्षः । केचिद्वदन्ति – निरालम्बनलक्षणो मोक्षः । के-

चिद्वदन्ति – ध्यानकलाकरणसंबद्धप्रयोगसंभवेन रूपबिन्दुनादचैतन्यपिण्डाकाशलक्षणो मोक्षः। केचिद्वदन्ति – पूजापूजकमद्यमांसादिसुरतप्रसङ्गसानन्दलक्षणो मोक्षः। केचिद्वदन्ति – मूलकन्दोल्लासितकुण्डलिनीसंचारलक्षणो मोक्षः। केचिद्वदन्ति – सुसमदृष्टिनिपातलक्षणो मोक्षः, इत्येवंविधभावनाश्रितलक्षणो मोक्षो न भवति। अथ मोक्षपदं कथ्यते – यत्र सहजसमाधिक्रमेण मनसा मनः समालोक्यते स एव मोक्षः। कामविषहरस्थानं मानसोद्भवः मनोमध्ये कारणं कारणात् उत्पत्तिस्थितिप्रलयाः प्रवर्तन्ते। उक्तं च भगवता महेश्वरेण।

'जीवन्मुक्तिपदे देवि चित्तं बीजनिरञ्जनम्।
मृत्युमार्गस्थितो योगी ज्ञात्वा कर्म समभ्यसेत्॥'

---

उम्मजन्त मरण हकारण मरणहजं मइ।
अब सुजीवनमरण इसरण गतकन्दुनाबिहत इतासु॥

---

इति जीवन्मुक्तिपदम्, अनेन मार्गेण स्थिरत्वं भवति। अथाधारणकर्मोदितशङ्खिनीभेदव्यवस्थाव्याख्या – गुदमेढ्रान्तरे त्रिकोणत्रिधा-

वर्तभगमण्डलमुच्यते, तत्र आधारग्रन्थय एकद्वित्रयश्च इति, एकद्वित्रयाणां मध्ये ग्रन्थीनामुपान्तरे चतुष्पत्रं पद्मम् अधोमुखं तिष्ठति, तत्र कर्णिकामध्ये मृणालसूत्रपरिमाणा शङ्खावर्ता तत्र प्रवालाङ्कुरसन्निभा द्वित्रिनाडीभूता कुण्डलिनी शक्तिः चैतन्यबीजमुखं गत्वा सुप्ता ।

तत्र त्रिपथमध्ये तु सूक्ष्मीभूता व्यवस्थिता ।
ऊर्णातन्तुनिभाकारा गता सा नाभिमण्डलम् ॥
चतुरङ्गुलमानेनाप्यष्टधा कुटिलाकृतिः ।
स्फुरिता नाभिमध्ये तु शाखाशाखमनेकधा ॥
दशनाड्याश्रितं चक्रं नाभिमध्ये प्रकीर्तितम् ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
ऊर्ध्वमार्गस्थिता ह्येता बृहच्छाखावलम्बिताः ।
जयन्त्यलम्बुसा चैका बृहच्छाखावलम्बिनी ॥
प्रणीता सा ह्यनेकैस्तु ब्रह्मावर्तेन संस्थिता ।

ब्रह्मदण्डचक्रेणासौ कपालकर्परं यावत्, तस्मिन् कपालकर्परे चन्द्रमण्डलान्तर्गतं कपाललिङ्गं लम्पिकास्थानोर्ध्वेऽमृतधारामभिस्रवति, मस्तकमध्ये गर्भे तिष्ठति तदेवामृतं राजदन्तमये शङ्खिनी ब्रह्मदण्डतले दमयित्वा

स्रवति। एकं मुखरन्ध्रं राजदन्तान्तरे, एतदेव शङ्खिनीमुखं 'दशमद्वारम्' इत्युच्यते। यत्र च मूलभगमण्डलान्ते कुण्डलिनी शक्तिर्विनिर्गता तत्र वामभागोद्भवसोमनाडिका, दक्षिणभागोद्भवसूर्यनाडिका, चन्द्रो वामाङ्गव्यापकः, सूर्यो दक्षिणाङ्गव्यापकः, चन्द्रो वामाङ्गे वामनासापुटं, सूर्यो दक्षिणाङ्गे दक्षिणनासापुटम्—इत्येवं सूर्यचन्द्रौ व्यवस्थितौ। यत्र मूलकन्दे पवनोदयः, मनस उदयः, तपनोदयः, जीवोदयः, शब्दोदयः, मातृकाक्षरोदयश्च—इति। मनोमध्ये निद्राविषयम् इच्छाकार्यो निरञ्जनः परमात्मा।

मूलकन्दोद्यतो वायुः सोमसूर्यपथोद्भवः।
शक्त्याधारास्थितो याति ब्रह्मदण्डकभेदकः॥
मूलकन्दे तु या शक्तिः कुण्डलाकाररूपिणी।
उद्गमावर्तवातोऽयं प्राण इत्युच्यते बुधैः॥
कन्ददण्डेन चोद्दण्डैर्भ्रामिता या भुजङ्गिनी।
मूर्च्छिता सा शिवं वेत्ति प्राणैरेवं व्यवस्थिता॥

जन्मावस्थानादधो लिङ्गः स चाधारकन्दजातिमध्यस्थितो गुह्य ऊर्ध्वे भवति, तस्योर्ध्वे

लिङ्गस्थानं स्वाधिष्ठानं नाभिमण्डले मणिपूरकस्योर्ध्वभागेऽनलकः तेनोद्दण्डकाद्यं समागच्छति, अधःप्रदेशे मणिपूरकस्य दक्षिणपश्चिमवर्ति अमेध्यस्थानम्, मध्ये नाभेःकन्दः, तत्र पद्माकृतिः, तत्र शरीरनाडीनामाधारः कथ्यते, हृदये पृथिवीतत्त्वं पीतवर्णं, मध्ये कदम्बगोलकाकृति, तत्र चित्तविश्रान्तिस्थानं तदेव अनलचक्रम्, कण्ठे चोदकप्रवाहपूर्णमात्मतत्त्वं तत् विशुद्धिस्थानम्, तालुमध्ये दीपशिखाकारः सदोद्द्योतः तत्तेजस्तत्त्वम्, कपालकन्दराङ्कुरे वायुतत्त्वम्, नासाग्रे आकाशतत्त्वम्, तस्योर्ध्वे आज्ञास्थानम्, आज्ञास्थानान्तरे ग्रन्थिषोडशान्तरे अमृता षोडशी कला, तदन्तरे वालाग्रशतधाश्रया अन्ते तस्योर्ध्वे कलान्ते बिन्दुः, बिन्दुभेदादनन्तरं शृंगाटकाकृतिर्मस्तकस्योद्देशः, तस्मिन् चित्तलयस्थानम्, चित्तस्य शरीरबन्धनाद्द्योपेतस्त्रैलोक्यविहारः, तस्याश्रिता ज्ञानशक्तिः, एवं शक्तित्रयालंकृतश्चिद्दर्पणप्रतिबिम्बः समो विविधभावकलाक-

लितः संसारचेष्टावलोकनकुशलः सुप्तावस्थायां रूपी जलचन्द्रवत् दृश्यते यः स परमात्मा सर्वव्यापी महेश्वरः चतुर्दशविधभूतग्रामकर्ता च इति, सोऽयं परमात्मा ॥

---

इति श्रीगोरक्षनाथविरचितं परमरहस्योपदेशमहाज्ञान-
ममरौघशासनं संपूर्णम् ॥

---

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

(तिलकम्)

---

श्रीमदमरेशशिवार्पणं भूयात् ।

Kashmir Series of Texts and Studies.

No. XXIV.

# THE

# TANTRAVAṬA-DHĀNIKA.

Edited with notes by

MAHĀMAHOPĀDHYĀYA

PAṆḌIT MUKUND RĀM SHĀSTRĪ,

Officer-in-Charge Research Department,

JAMMU AND KASHMIR STATE,

SRINAGAR.

Published under the Authority of the Government of

His Highness Lieut.-General Mahārāja

Sir PRATĀP SINGH SĀHIB BAHĀDUR,

G. C. S. I., G. C. I. E., K. G. C. B. E., LL. D.,

MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




BOMBAY:

PRINTED AT THE 'NIRNAYA-SAGAR' PRESS.

1918.



काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २४

# तन्त्रवटधानिका ।

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्ताख्याचार्य-विशेषविरचिता ।

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-श्रीप्रतापसिंहवरप्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च)कार्यालये
तदध्यक्ष-**महामहोपाध्याय**-पण्डित-**मुकुन्दराम-शास्त्रिणा**
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

मुम्बय्यां
निर्णयसागराख्यमुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः ।




संवत् १९७५ खैस्ताब्दः १९१८

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्-
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥१॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

श्रीसंविद्वपुषे शंकराय नमः

अथ

# तन्त्रवटधानिका ।

श्रीमदभिनवगुप्ताख्याचार्यविशेषविरचिता ।

## प्रथममाह्निकम् ।



प्रणम्य गुरुमीशानं सत्तन्त्रवटधानिका ।
मयाभिनवगुप्तेन स्वशक्त्युद्दीप्तये कृता ॥ १ ॥
अज्ञानं बन्धने हेतुर्बन्धनं हि पुनर्भवः ।
पुनर्भवश्च देहादौ वेद्ये स्वात्मत्वनिश्चयात् ॥ २ ॥
अहं सुकृतकारीति स्वर्गादौ भोक्तृता मम ।
इत्यादिदेहतादात्म्यात्स्वर्गावीच्यादिषूद्भवः ॥ ३ ॥
अतोऽनात्मनि देहादौ गलिते स्वात्मनिश्चये ।
घटादिवदनात्मेति देहादिं स्थितमप्यमुम् ॥ ४ ॥
पश्यतः पूर्वसंस्कारक्षयाद्देहे क्षयं गते ।
अन्योचितस्वसंस्काराभावाद्देहः कथं भवेत् ॥ ५ ॥
देहाभावेऽपि वै तस्य प्राणधीशून्यगोचरे ।
आत्मसंस्कारसद्भावे भवेत्तद्रूपता परम् ॥ ६ ॥
प्राणादावपि तु ध्वस्ते स्वात्मभावे परिस्फुटम् ।
सर्वावच्छेदहीनं तदात्मतत्त्वं प्रकाशते ॥ ७ ॥

पं० २ ख० पु० सूक्ष्माभिनवेति पाठः ।

अनवच्छिन्नरूपत्वादसंवेद्यं तदुच्यते ।
अवच्छेदाज्जडं वेद्यमन्याधीनप्रकाशकम् ॥ ८ ॥
स्वप्रकाशैकरूपत्वाद्भावात्मत्वेन भासनात् ।
तथात्वेऽपि स्वतन्त्रत्वाच्छक्तिमान्स शिवः स्मृतः ॥९॥
सर्वात्मभूतः सर्वाध्वसमुत्तीर्णः स्वतन्त्रकः ।
स्वशक्त्या भासितानन्तविश्वः स परमेश्वरः ॥ १० ॥
स एष सत्यतो मुक्तः सर्वावच्छेदवर्जनात् ।
अन्ये न तत्त्वतो मुक्ता अवच्छेदांशसंभवात् ॥११॥
अतो यावन्न सर्वस्मिन्वेद्ये वेद्यतया गतिः ।
तावद्वेद्यांश एकस्मिन्भवेत्स्वात्मत्वनिश्चयः ॥ १२ ॥
यदा तु धरणीतत्त्वाच्छिवान्तं तत्त्वपञ्जरम् ।
अवच्छिन्नं भवेद्वेद्यमनन्योन्यात्मकं स्फुरत् ॥ १३ ॥
तदा तावति संवेद्यजाते वेदकमस्य यत् ।
इयतस्तदवच्छेदहीनं भाति परं शिवम् ॥ १४ ॥
तत्प्रकाशं प्रमातृत्वान्नेतरन्मेयभावतः ।
मेयत्वमस्यावच्छेदात्स ह्यवच्छेदके सति ॥ १५ ॥
तदेवं च धरातत्त्वाच्छिवान्तं मातृ नेतरत् ।
अमातृभावादेवान्यदप्रकाशात्मकं स्थितम् ॥ १६ ॥
अप्रकाशं च नास्त्येव सत्ता प्राकाश्यमेव हि ।
ततश्चायं प्रकाशत्वात्स्वयं सत्तास्य नोचिता ॥१७॥
पराधीनैव सत्तास्य पराधीनप्रकाशनः ।
परिच्छेदप्रकाशस्तत्सोऽपि तत्तुल्य एव यत् ॥ १८ ॥
अतः प्रकाशाधीना चेत्सत्तास्मिन्सार्वकालिकी ।
नूनं प्रकाश एवास्ति योऽवच्छेदविवर्जितः ॥ १९ ॥

तत्र प्रकाशे भान्त्येते स्वावच्छेदनियन्त्रिताः ।
भावाः प्रकाशस्वातन्त्र्याद्विचित्राकारबृंहिताः ॥ २० ॥
यथा च तेऽवभासन्ते तथा तदुचिताः पुनः ।
तेषां प्रकाशका भान्ति सुरान्तास्तिर्यगादयः ॥२१॥
प्रकाशकत्वाच्चैतेषां शिवात्मत्वेऽपि सुस्फुटे ।
वेद्याश्चान्योन्यतश्चायमवच्छेदोऽस्ति यत्नतः ॥ २२ ॥
अप्रकाशत्वमप्यस्ति तत्प्रकाशप्रकाश्यताम् ।
गतास्ते पशवो भान्ति शिवस्यैव स्वशक्तितः ॥२३॥
अवच्छेदांश एतेषां स्वप्रकाशश्च यः स्फुटः ।
स विचित्रस्वभावत्वाद्देहप्राणादितां गतः ॥ २४ ॥
देहादेरपि वैचित्र्याद्देवतिर्यङ्मनुष्यता ।
वैचित्र्यान्तरतोऽत्रापि चैत्रमैत्रादिरूपता ॥ २५ ॥
यथा च पशवो भान्ति तथा केचन तां निजाम् ।
अप्रकाशदशां घ्नन्ति देहप्राणतदात्मताम् ॥ २६ ॥
ते प्रबुद्धाश्च पतयो जीवन्मुक्ता महर्षयः ।
तेषां तत्तारतम्येन गुरुशिष्यादिता स्थिता ॥ २७ ॥
तदेवं भेदभोक्तृत्वं सृष्टिस्तत्स्थिरता स्थितिः ।
अंशेन न्यक्क्रिया तस्य संहारोऽनुग्रहः पुनः ॥ २८ ॥
अप्रकाशदशाध्वंसस्तदुपायैकलग्नता ।
हृदयान्निन्दनं तस्य तत्सेवा तत्तिरोहितिः ॥ २९ ॥
एवंविधं पञ्चकृत्यं भासयन्परमेश्वरः ।
यदाभाति तदेवास्य चित्त्वमैश्वर्यमुच्यते ॥ ३० ॥
तथाविधप्रकाशांशध्वंसः कस्याप्युपायतः ।
विनैव कस्य चिचित्रैरुपायैः संस्क्रियादिभिः ॥ ३१ ॥

पं० ६ ख० पु० वेद्यादन्योन्यत इति पाठः ।

तदेवं वेद्यरूपत्वाद्वोद्धृत्वं बन्धमुक्तता ।
इयतः सकलस्यात्मा प्रकाशोऽभ्यधिकस्ततः ॥ ३२॥
सर्वातिरिक्तः सर्वात्मा स्वतन्त्रः सर्वशक्तिकः ।
सर्वपूर्णोऽनवच्छिन्नप्रकाशो भैरवः पुनः ॥ ३३ ॥
यद्रूपत्वं परा मुक्तिः पुनरावृत्तिवर्जिता ।
अन्यास्तु धीप्राणशून्यधियो जन्मक्षयोचिताः ॥३४
शून्यं धीः प्राण इत्येतत्सृज्यते क्षीयतेऽपि च ।
स्थैर्यमस्य परं देहापेक्षया न तु तत्त्वतः ॥ ३५ ॥
अतः षट्त्रिंशदन्तःस्थे तत्त्वे स्वात्मत्वनिश्चयात् ।
वेद्यांशे मुक्तिरस्य स्यादावृत्तिः सोर्ध्वतः परम् ॥३६
यदा समस्तवेद्यांशसमुत्तीर्णं परं महः ।
भाति मुक्तस्तदैवासौ भैरवः परमः स्मृतः ॥ ३७ ॥

इति श्रीमदभिनवगुप्ताचार्यविशेषविरचितायां तन्त्रवटधानिकायां
प्रथममाह्निकम् ॥ १ ॥

---

पं० १२ ख० पु भैरवः परमेश्वर इति पाठः ।

# द्वितीयमाह्निकम् ।

उपायैर्न शिवो भाति भान्ति ते तत्प्रसादतः ।
स एवाहं स्वप्रकाशो भासे विश्वस्वरूपकः ॥ १ ॥
इत्याकर्ण्य गुरोर्वाक्यं सकृत्केचन निश्चिताः ।
विना भूयोऽनुसंधानं भान्ति संविन्मयाः स्थिताः २
यथादर्शे घटादीनां स्थितिर्मिश्रेतरात्मिका ।
चिदात्मनि तथामीषां भावानां चित्ररूपिणी ॥ ३ ॥
आदर्शस्तु जडत्वान्न स्वतन्त्रो भासते यथा ।
अहंप्रकाशरूपत्वात्स्वतन्त्रो भासते तथा ॥ ४ ॥
इत्येवं गुरुतः श्रुत्वा वाक्यं तद्भावनाक्रमात् ।
भूयोभूयोऽनुसंधानात्कोऽपि याति शिवात्मताम् ॥५
नाहं देहात्मको नाहं कर्माधीनो न मे मलः ।
नान्येन प्रेरितोऽस्मीति किं त्वेतद्विपरीतकम् ॥ ६ ॥
इत्थं विकल्पं संस्कृत्य स्पष्टविद्यात्मतां नयन् ।
कश्चिद्याति समावेशं धन्यः श्रीगुरुवाक्यतः ॥ ७॥
स्वप्रकाशं समस्तात्मतत्त्वं मात्रादिकं त्रयम् ।
अन्तःकृत्य स्थितं ध्यायेद्धृदयानन्दधामनि ॥ ८ ॥
तद्द्वादशमहाशक्तिरश्मिचक्रेश्वरं विभुम् ।
व्योमभिर्निःसरद्बाह्ये ध्यायेत्सृष्टिं स्थितो दधत्॥९॥

---

१ 'उपायैर्न शिवो भाति' इत्यादि पद्यद्वयं तन्त्रालोके ( २ आ० २ पद्यटीकायां ) यदुक्तमितीयता ग्रन्थकृन्नामानुद्दिश्य यत्प्रमाणरूपेणोपन्यस्तमतोऽनुमीयते एतद्ग्रन्थकृदभिनवगुप्तः प्रसिद्धाभिनवगुप्ताचार्याद्भिन्नो राजानकजयरथाचार्यात्पौर्वकालिकश्च संभवतीति ।

---

पं० १६ ख० पु० स्थितिं ध्यायेदिति पाठः ।

पश्चाद्ग्रस्तसबाह्यान्तर्भावमज्ञानमात्मनि ।
विश्राम्येत्पुनरप्येवं ध्यानाभ्यासात्प्रथात्मनः ॥१०॥
प्राणो बोधमयः पूर्वं तत उल्लसति स्फुटम् ।
मेयं पूरयते तेन स क्रमैक्यं प्रपद्यते ॥ ११ ॥
तदेव संजिहीर्षेत संहृत्यापूर्णतां नयेत् ।
एतावदनुसंधत्ते सप्त विश्रान्तयस्त्विमाः ॥ १२ ॥
उन्मिषत्तोन्मिषितता संघजैरेकविंशतिः ।
आनन्द उद्भवः कम्पो निद्रा................. ॥ १३ ॥
तत्रोत्तरोत्तरावेशभेदात्पश्चोत्तरं च यत् ।
तत्रापि त्रितयं मुख्यं सृष्टिसंहारबीजकम् ॥ १४ ॥
योगिनीहृदयानन्दव्योमभूसंप्रदायतः ।
अव्यक्तेतरयुग्मात्मलिङ्गतादात्म्ययोगतः ॥ १५ ॥
श्रीमदाचार्यचक्रस्थो मन्त्रवीर्यं तदुत्तमम् ।
अष्टोत्तरशताविष्टं मन्त्राः प्राणपथे यतः ॥ १६ ॥
एवं धीप्राणसंघट्टद्वारेणान्तः समाविशन् ।
शाम्भवीं परमां धारामाणवेन प्रपद्यते ॥ १७ ॥
तदेवं त्रिविधं प्राप्य गुरोरावेशमुत्तमम् ।
गुरुमभ्यर्चयेद्धीमान्देहसर्वस्वदानतः ॥ १८ ॥
नैनं प्रकोपयेन्नास्य वाक्यं किंचन लङ्घयेत् ।
अविचारितमस्याज्ञां कुर्याज्ज्ञानं स्थिरं तथा ॥१९॥

इति श्रीमदभिनवगुप्ताचार्यविशेषविरचितायां तन्त्रवटधानिकायां
द्वितीयमाह्निकम् ॥ २ ॥

---

पं० १२ ख० पु० तादात्म्यनिश्चय इति पाठः ।

## तृतीयमाह्निकम् ।

एवमाभ्यन्तरी सत्ता शिवताद्रात्म्यदायिनी ।
यथा भवेत्तथा प्रोक्तं बाह्येदानीं निगद्यते ॥ १ ॥
बाह्यो भेदो द्विधा दृष्टः क्रियातो रूपतस्तथा ।
एकस्मिन्नपि कालात्मा तत्राद्यो देशतः परम् ॥ २ ॥
क्रिया स्वात्मपरिस्पन्दस्ततः प्राणोऽथ तत्कृतम् ।
कालवैचित्र्यमित्येवं संवित्स्पन्दाधिकं नहि ॥ ३ ॥
यथा संविद्घटात्मासौ चिदात्मेति तरङ्गिता ।
शक्तिस्तथा विचित्रोऽयं सृष्टिसंहारविभ्रमः ॥ ४ ॥
स्वप्नसंकल्पमायांशक्रियावैचित्र्यचित्रितः ।
विचित्रः काल एकोऽयं संसारस्पन्द ईदृशः ॥ ५ ॥
प्राकृतं पार्थिवं वैश्वं शाक्तं चाण्डचतुष्टयम् ।
विचित्रदेशभुवनतत्त्वात्मकमिदं स्फुरत् ॥ ६ ॥
ममैवान्तरतः सर्वदेशकालात्मिकां भिदाम् ।
अन्तःकृत्याहमेवैक इति ज्ञानाद्विमुक्तता ॥ ७ ॥
यावद्विचित्रं बाह्यं हि तन्न षट्त्रिंशतः परम् ।
मानसं वेत्ति विश्रान्त्या विना संविन्मयं यतः ॥८॥
कठिनं द्रवमत्युष्णं स्पर्शं च सावकाशतः ।
पञ्च भूतानि चित्राणि तन्मात्राणि तु तद्गुणाः ॥ ९ ॥
गन्धो रसो रूपमथ स्पर्शः शब्दो विशेषकः ।
एतेषां ग्राहकं चाक्षं पञ्चधा ज्ञानशक्तिजम् ॥ १० ॥

क्रियाशक्त्युत्थमन्यच्च तत्कर्मेन्द्रियपञ्चकम् ।
संकल्पनिश्चयौ मानस्तदन्तःकरणत्रयम् ॥ ११ ॥
इयतो वेद्यजातस्य यदभिन्नं वपुः पुरा ।
तत्प्रधानमियद्वेद्यं जडं तद्वेदकः पुमान् ॥ १२ ॥
सोऽप्रकाशप्रकाशात्मा षट्कञ्चुकपरिष्कृतः ।
किंचित्करोति जानाति तच्चेदं शक्तिमानिह ॥ १३ ॥
यतोऽस्मि सोऽधुनैवैते कला विद्या सरक्तयः ।
कालश्च सर्वतत्त्वानां पूर्णभूमिर्निशा स्पृहा ॥ १४ ॥
अप्रकाशांशगलने प्रकाशस्य स्फुटा स्थितिः ।
प्रकाशदर्पणे भावदर्शनं तदभेदतः ॥ १५ ॥
भावानां भासनं शुद्धः प्रकाश इति पञ्चधा ।
विद्यातत्त्वादा शिवान्तं तदभिन्नः परः शिवः ॥ १६ ॥
उपदेश्यतया सोऽपि स्यादवच्छेदभागतः ।
अष्टात्रिंशं परं धाम यत्रेदं विश्वकं स्फुरत् ॥ १७ ॥
प्रत्येकमपि भावस्य यो भेदो ज्ञातृभेदतः ।
यथा घटं वेद्मि तथा मया ज्ञातं शिवेन वा ॥ १८ ॥
इत्येवं स्वात्मनः सर्वमन्तः पश्यन्स्वसंविदा ।
गलिताशेषभेदांशो भैरवीभावमश्नुते ॥ १९ ॥
इयद्यदुक्तं तत्कोऽपि स्वयमेवाववुध्यते ।
कश्चिद्गुरूपदेशेन शास्त्राद्वाथ द्वयात्त्रयात् ॥ २० ॥
गुरोस्त्वभ्यस्तविज्ञानो दीक्षया स विमुच्यते ।
दीक्षा च सामयी नाम मन्त्रतादात्म्यदायिनी ॥ २१ ॥
चर्याक्रमेण देहान्ते सम्यक्समयपालनात् ।
सा च सर्वाध्वसंपूर्णमात्रसंविदभेदिता ॥ २२ ॥

पं० १५ ख० पु० मपि तत्त्वस्य य इति पाठः ।

गुरुणानुग्रहधिया शिष्ये यदवलोकनम् ।
पौत्रिकी सा पुनश्चर्यामात्रेण प्रायणे यया ॥ २३ ॥
परं शिवत्वमभ्येति विनापि ज्ञानयोगतः ।
सा च क्रमात्क्रमं शिष्यचितेः शिवनियोजनम् २४
अतिक्रम्य तु षट्त्रिंशदन्तमध्वानमादरात् ।
सास्वस्थे प्राप्तमृत्यौ वा मृते दूरस्थ एव वा ॥ २५ ॥
गुर्वन्तेवासितद्बन्धुमुखोत्थाच्छक्तिपाततः ।
स्थावरेष्वथ दीक्षा हि पशुष्वपि निरूपिता ॥ २६ ॥
ते तु न ज्ञानहीनत्वात्साधका गुरवोऽपि वा ।
समस्तज्ञानसंभारपूर्णस्वात्मविकासतः ॥ २७ ॥
वाञ्छन्साधकतां नेयो निष्कामस्तु गुरूत्तमः ।
सर्वसंपूर्णकृत्यस्य स्वात्मार्थेऽनभिलाषिणः ॥ २८ ॥
पारिशेष्यात्परार्थैव ह्यनपाया क्रियेशवत् ।
नित्यं नैमित्तिकं चैव गुरुः समयिपुत्रके ॥ २९ ॥
द्वयेऽप्युपदिशेदाद्यः स्वयं नित्यमुपाचरेत् ।
नैमित्तिकं गुरुः कुर्यात्तच्च पर्वदिनार्चनम् ॥ ३० ॥
यत्र सिद्धाश्च खेचर्यः संकेतं चक्रिरे पुरा ।
पवित्रकविधिश्चान्यो यः समग्रं प्रपूरयेत् ॥ ३१ ॥
नैमित्तिकं मुख्यकल्पं सर्वथा समुपाचरेत् ।
शक्तितद्वद्भेदेन स्वानन्दात्मकवस्तुनि ॥ ३२ ॥
तद्रसासारधातूत्था क्रिया मुख्यो विधिस्त्वयम् ।
मासि मास्यथ वर्षे वा जन्ममध्येऽथ वा पुनः ॥३३॥
मुख्येन विधिना वृत्तिस्तर्हि चर्या न पूरिता ।
अपूर्णचर्यायोगेन चर्यापायैकमुक्तिकः ॥ ३४ ॥

पं० १७ क० पु० सिद्धाश्च ये चार्या इति पाठः ।

मुक्तो विघ्नं व्रजेत्तस्मात्सर्वथा पूरयेद्विधिम् ।
कश्चिदीशेच्छया सम्यगनाश्वस्तोऽपि चेतसा ॥३५॥
निन्दन्नेव भजंश्चर्यां स तिरोहित उच्यते ।
निन्द्यमाने महामन्त्रविद्याचर्यादिकोपजम् ॥ ३६ ॥
पाप्मैषां पातयेद्घोरे यातनाधाम्नि सर्वथा ।
कस्यापि तु तिरोभूतवृत्तेरपि पुनर्निजम् ॥ ३७ ॥
Myself: हृदयं सम्यगाश्वासादविघ्नं शिवतां व्रजेत् ।
एवं धीप्राणसंबन्धादान्तराद्बाह्यतोऽपि च ॥ ३८ ॥
चर्यया यः समावेशः स इहाणव उच्यते ।
तस्मिन्रूढः समभ्येति शाक्तमस्माच्च शांभवम् ॥३९॥
ततः परं पूर्वसत्तां पररूढस्तु न त्यजेत् ।
उल्काहस्तो यथा कश्चित्प्राप्यमादाय तां त्यजेत् ४०
ज्ञानेन ज्ञेयमालोक्य तथा ज्ञानं त्यजेदिति ।
उक्तं श्रीकालपादादौ ज्ञाने नष्टे न तत्सदा ॥ ४१ ॥
ज्ञप्तिसाधनमेवोक्तं न ज्ञेयं परमं पदम् ॥ ४२ ॥
एषाभिनवगुप्तेन रचिता तन्त्रधानिका ।
हृद्भूमौ यस्य रूढा स शिवकल्पमहीरुहः ॥ ४३ ॥

इति श्रीमदभिनवगुप्ताचार्यविशेषविरचितायां तन्त्रवटधानिकायां तृतीयमाह्निकम् ॥ ३ ॥

समाप्ता चेयं तन्त्रवटधानिका ॥

---

पं० १६ क० पु० न ज्ञानं परमेति पाठः ।

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥



सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

( तिलकम् )

---

श्रीस्वात्मशिवार्पणं शिवदं च बोभवीतु अध्येतृश्रोतृविमृष्टृणाम् ॥

---

